अथ

# गोपालसहस्रनाम

प्रारभ्यते

श्रीराधाकृष्णाभ्यां नमः



फुल्लेन्दीवरकान्तिमिन्दुवदनंवर्हावतंसप्रियं श्रीवत्सांकमुदारकौ-
स्तुभधरं पीताम्बरं सुंदरम्। गोपीनांनयनोत्पलार्चिततनुं गोगो-
पसंघावृतंगोविन्दं कलवेणुवादनपरं दिव्यांगभूषं भजे॥१॥

श्रीगणेशाय नमः

# अथ

# गोपालसहस्त्रनाम प्रारभ्यते

पार्वत्युवाच

कैलासशिखरे रम्ये गौरी पृच्छति शंकरम् ॥
ब्रह्माण्डाऽखिल नाथस्त्वंसृष्टिसंहारकारकः ॥१॥
त्वमेव पूज्यसे लोकैर्ब्रह्मविष्णुसुरादिभिः ॥
नित्यं पठसि देवेश कस्य स्तोत्रं महेश्वर ॥२॥

आश्चर्यमिदमत्यन्तं जायते मम शंकर ॥
तत्प्राणेश महाप्राज्ञ संशयं छिन्धि शंकर ॥३॥

श्रीमहादेव उवाच

धन्याऽसि कृत पुण्याऽसि पार्वति प्राणवल्लभे ॥
रहस्यातिरहस्यं च यत्पृच्छसि वरानने ॥ ४ ॥
स्त्रीस्वभावान्महादेवि पुनस्त्वं परिपृच्छसि ॥
गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ॥ ५ ॥
दत्ते च सिद्धिहानिः स्यात्तस्माद्यत्नेन गोपयेत् ॥
इदं रहस्यं परमं पुरुषार्थप्रदायकम् ॥ ६ ॥

धनरत्नौघमाणिक्यतुरङ्गमगजादिकम् ॥
ददाति स्मरणादेव महामोक्षप्रदायकम् ॥ ७ ॥
तत्तेऽहं संप्रवक्ष्यामि शृणुष्वावहिता प्रिये ॥
योऽसौ निरञ्जनो देवश्चित्स्वरूपी जनार्दनः ॥८॥
संसारसागरोत्तारकारणाय सदा नृणाम् ॥
श्रीरंगादिकरूपेण त्रैलोक्यं व्याप्य तिष्ठति ॥९॥
ततो लोका महामूढा विष्णुभक्तिविवर्जिताः ॥
निश्चयं नाधिगच्छन्ति पुनर्नारायणो हरिः ॥१०॥

निरञ्जनो निराकारो भक्तानां प्रीतिकामदः ॥
वृन्दावनविहाराय गोपालं रूपमुद्वहन् ॥ ११ ॥
मुरली वादनाधारी राधायै प्रीतिमावहन् ॥
अंशांशेभ्यः समुन्मील्य पूर्णरूपकलायुतः ॥१२॥
श्रीकृष्णचन्द्रो भगवान्नन्दगोपवरोदतः ॥
धरणीरूपिणी माता यशोदानन्ददायिनी ॥१३॥
द्वाभ्यां प्रयाचितो नाथो देवक्यां वसुदेवतः ॥
ब्रह्मणाऽभ्यर्थितो देवो देवैरपि सुरेश्वरि ॥१४॥

जातोऽवन्यांमुकुन्दोऽपि मुरलीवेदरेचिका ॥
तया सार्द्धं वचः कृत्वा ततोजातो महीतले ॥१५॥
संसारसारसर्वस्वं श्यामलं महदुज्ज्वलम् ॥
एतज्ज्योतिरहं वेद्यं चिन्तयामि सनातनम् ॥१६॥
गौरतेजो विना यस्तु श्यामतेजः समर्चयेत् ॥
जपेद्वाध्यायते वापि स भवेत्पातकी शिवे ॥१७॥
स ब्रह्महा सुरापी च स्वर्णस्तेयी च पञ्चमः ॥
एतैर्दोषैर्विलिप्येत तेजो भेदान्महेश्वरि ॥ १८ ॥

स०
७

तस्माज्ज्योतिरभूद्द्वेधा राधामाधव-रूपकम् ॥
तस्मादिदं महादेवि गोपालेनैव भाषितम् ॥१९॥
दुर्वाससो मुनेर्मोहे कार्तिक्यां रासमण्डले ॥
ततः पृष्टवती राधा संदेहं भेदमात्मनः ॥२०॥
निरञ्जनात्समुत्पन्नं मयाधीतं जगन्मयि ॥
श्रीकृष्णेन ततः प्रोक्तं राधायै नारदाय च ॥२१॥
ततो नारदतः सर्वं विरला वैष्णवास्तथा ॥
कलौ जानन्ति देवेशि गोपनीयं प्रयत्नतः ॥२२॥

शठाय कृपणार्थाय दांभिकाय सुरेश्वरि ॥ स०
ब्रह्महत्यामवाप्नोति तस्माद्यत्नेन गोपयेत् ।२३॥ १
अस्य श्रीगोपाल-सहस्रनामस्तोत्रमहामन्त्रस्य ॥
श्रीनारदऋषिः ॥ अनुष्टुप् छन्दः ॥
श्री गोपालो देवता ॥ कामो बीजम् ॥
माया शक्तिः ॥ चन्द्रः कीलकम् ॥
श्रीकृष्णचन्द्रभक्तिरूपफलप्राप्तये ॥ श्रीगोपाल
सहस्रनामजपे विनियोगः अथवा ॥

गो० १०

ॐ ऐं क्लीं बीजम् ॥ श्रीं ह्रीं शक्तिः ॥
श्रीवृन्दावननिवासः कीलकम् ॥
श्रीराधाप्रियं परं ब्रह्मेति मन्त्रम् ॥
धर्मादि चतुर्विधपुरुषार्थसिद्ध्यर्थेंजपेविनियोगः
ॐ क्लां अंगुष्ठाभ्यां नमः ॐ क्लींतर्जनीभ्यां० ॥
ॐ क्लूं मध्यमा० । ॐ क्लैं अनामिकाभ्यां० ॥
ॐ क्लौं कनिष्ठि० ॥ ॐ क्लः करतल कर
पृष्ठाभ्यां नमः ॥ ॐ क्लां हृदयाय नमः ॐ क्लीं

शिरसेस्वाहा ॥ ॐ क्लूँ शिखायै व० ॥ स०
ॐ क्लैंकवचायहुम् ॥ ॐ क्लौं नेत्रत्रयायवौषट् ११
ॐ क्लः अस्त्राय फट् ॥ अथ ध्यानम् ॥
कस्तूरी तिलकं ललाटपटले वक्षस्थले कौस्तुभं,
नासाग्रेवरमौक्तिकं करतले वेणुं करे कंकणम् ॥
सर्वांगे हरिचंदनंचकलयन्कंठेचमुक्तावलिंगोपस्त्री
परिवेष्टितो विजयते गोपालचूड़ामणिः ॥ १ ॥
फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं

श्रीवत्सांकमुदारकौस्तुभधरं पीताम्बरंसुंदरम् ॥
गोपीनां नयनोपलार्चिततनुं गोगोपसंघावृतं
गोविन्दंकलवेणुवादनपरंदिव्यांगभूषं भजे ॥२॥
इति ध्यानम् ॐ क्लीं देवः कामदेवः कामबीज
शिरोमणिः ॥ श्रीगोपालो महीपालः सर्ववेदांग
पारगः १॥धरणीपालको धन्यः पुंडरीकः सनातनः
गोपति १०र्भूपतिःशास्ता प्रहर्ताविश्वतोमुखः॥२॥
आदिकर्ता महाकर्ता महाकालः प्रतापवान् ॥

जगज्जीवोजगद्धाता २० जगद्भर्ता जगद्वसुः ॥३॥ स०
मत्स्योभाभः कुहूभर्ता हर्ता वाराहमूर्तिमान् ॥ १३
नारायणोहृषीकेशागोविन्दो३० गरुणध्वज॥४॥
गोकुलेन्द्रो महाचंद्रः शर्वरीप्रियकारकः ॥
कमला मुखलोलाक्षः पुण्डरीकशुभावहः ॥५॥
दुर्वासा कपिलोभौमः सिन्धुसागर संगमः ॥४०॥
गोविंदो गोपतिर्गोत्रः कालिन्दीप्रेमपूरकः ॥६॥
गोपस्वामी गोकुलेन्द्रो गोवर्धनवरप्रदः ॥

गो० १४

नन्दादिगोकुलत्राता दाता दारिद्र्यभञ्जनः ॥६०॥

॥७॥ सर्वमंगलदाता च सर्वकामप्रदायकः ॥

आदिकर्ता महीभर्ता सर्वसागर सिन्धुजः ॥८॥

गजगामीगजोद्धारी कामी कामकलानिधिः ॥

कलंकरहितश्चन्द्रो ६० बिम्बास्योबिम्बसत्तमः ९

मालाकारः कृपाकारः कोकिलास्वरभूषणः ॥

रामोनीलाम्बरोदेवोहलीदुर्दममर्दनः ७० ॥१०॥

सहस्राक्षपुरीभेत्ता महामारीविनाशनः ॥

शिवः शिवनमोभेत्ता बलाराति प्रपूजकः ॥११॥ स०
कुमारीवरदायी च वरण्यो मीनकेतनः ॥ १५
नरो८० नारायणोधीरोराधापतिरुदारधीः ॥१२॥
श्रीपतिःश्रीनिधिःश्रीमान् मापतिः प्रतिराजहा ॥
वृन्दापतिः९०कुलग्रामीधामीब्रह्मसनातनः १३॥
रेवतीरमणो रामश्चञ्चलश्चारुलोचनः ॥
रामायणशरीरोऽयंरामी १०० रामःश्रियःपतिः १४
शर्वरः शर्वरी शर्वः ) सर्वत्रशुभदायकः ॥

गो० १६

राधाराधयिताराधी राधाचित्तप्रमोदकः ॥१५॥
राधारतिसुखोपेतो ११० राधामोहनतत्परः ॥
राधावशीकरो राधाहृदयाम्भोजषट्पदः ॥१६॥
राधालिङ्गनसंमोहो राधानर्तनकौतुकः ॥
राधासंजातसंप्रीती राधाकामफलप्रदः ॥ १७ ॥
वृन्दापतिःकोशनिधिःकोकशोकविनाशकः १२०
चन्द्रापतिश्चंद्रपतिश्चंडकोदंडभञ्जनः ॥ १८ ॥
रामो दाशरथी रामोभृगुवंशसमुद्भवः ॥

आत्मारामोऽजितक्रोधोमोहोमोहान्धभञ्जनः १९ स०
वृषभानु १३० र्भवोभावःकाश्यपिः करुणानिधिः १७
कोलाहलो हलीहाली हेली हलधरप्रियः ॥२०॥
राधामुखाब्जमार्तण्डो १४० भास्करोरविजोविधुः
विधिर्विधातावरुणोवारुणो वारुणीप्रियः ॥२१॥
रोहणीहृदयानन्दी वासुदेवात्मजो १५० बली ॥
नीलाम्बरो रोहणेयोजरासन्ध वधोऽमलः ॥२२॥
नागोनवाम्भो विरुदो विरहा वरदो बली ॥१६०॥

गोपथोविजयीविद्वानशिपिविष्टःसनातनः ॥२३॥
पशुंरामवचोग्राही वरग्राही शृगालहा ॥
दमघोषोपदेष्टा च रथग्राही ७० सुदर्शनः ॥२४॥
वीरपत्नीयशस्त्राता जराव्याधिविघातकः ॥
द्वारकावासतत्त्वज्ञो हुताशनवरप्रदः ॥ २५ ॥
यमुनावेगसंहारी नीलाम्बरधरः प्रभुः ॥
विभुःशरासनो १८० धन्वी गणेशो गणनायकः २६
लक्ष्मणो लक्षणो लक्ष्योरक्षोवंशविनाशनः ॥

वामनोवामनीभूतोवामनो १९० वामनारुहः २७॥ स०
यशोदानन्दनः कर्त्ता यमलार्ज्जुनमुक्तिदः ॥ १९
उलूखली महामानीदामबद्धाह्वयी शमी ॥२८॥
भक्तानुकारी भगवान् २०० केशवाऽचलधारकः ॥
केशहा मधुहा मोही वृषासुरविघातकः ॥२९॥
अघासुरविनाशी च पूतनामोक्षदायकः ॥
कुब्जाविनोदीभगवान् २१० कंसमृत्युर्महामखी ३०
अमेश्वधो वाजपेयो गोमेधो नरमेधवान् ॥

कन्दर्पकोटि-लावण्यश्चन्द्रकोटिसुशीतलः ॥३१॥
रवि कोटिप्रतीकाशो वायुकोटिमहाबलः ॥
२२० ब्रह्माब्रह्मांडकर्ता च कमलावाञ्छितप्रदः ३२
कमलो कमलाक्षश्च कमलामुखलोलुपः ॥
कमलाव्रतधारी च कमलाभः पुरन्दरः ॥३३॥
सौभाग्याधिकचित्तो२३०ऽयं महामायीमहोत्कटः ॥
तारकारिःसुरत्राता मारीचक्षोभकारकः ॥३४॥
विश्वामित्रप्रियो दान्तो रामो राजीवलोचनः ॥

लंकाधिपकुलध्वंसी२४०विभीषणवरप्रदः॥३५॥
सीतानन्दकरो रामो वीरो वारिधिबन्धनः ॥
खरदूषणसंहारी साकेतपुरवासनः ॥ ३६ ॥
चन्द्रावलीपतिःकूलःकेशी२५०कंसवधोऽमरः ॥
माधवोमधुहामाध्वीमाध्वीकोमाधवोमधुः ३७॥
मुञ्जाटवीगाहमानधेनुकारि २६० धरात्मजः ॥
वंशीवटविहारी च गोवर्धनवनाश्रयः ॥ ३८ ॥
तथा तालवनोद्देशी भाण्डीरवनशंखहा ॥

तृणावर्तकथाकारी वृषभानुसुतापतिः ॥ ३९ ॥
राधाप्राणसमोराधावदनाब्जमधुव्रतः ॥ २७० ॥
गोपीरञ्जनदैवज्ञो लीलाकमलपूजितः ॥ ४० ॥
क्रीडा कमलसंदोहो गोपिकाप्रीतिरञ्जनः ॥
रञ्जको रञ्जनो रंगो रंगीं रङ्गमही रुहः ॥ ४१ ॥
कामः२८०कामारि भक्तोऽयं पुराणपुरुषःकविः॥
नारदो देवलो भीमो बालो बालमुखाम्बुजः ४२॥
अम्बुजो ब्रह्मसाक्षी २९० च योगी दत्तवरो मुनिः

ऋषभः पर्वतो ग्रामो नदी पवनवल्लभः ॥ ४३ ॥ स०
पद्मनाभः सुरज्येष्ठो ब्रह्मा३००रुद्रोऽहि भूषितः ॥ २३
गणानां त्राणकर्त्ता च गणेशो ग्रहिलो ग्रही ॥४४॥
गणाश्रयो गणाध्यक्ष क्रोडीकृतजगत्त्रयः ॥
यादवेन्द्रो ३१० द्वारकेन्द्रो मथुरावल्लभो धुरी ४५
भ्रमरः कुन्तली कुन्ती सुतरक्षी महामखी ॥
यमुनावरदाता च कश्यपस्य वरप्रदः ॥ ४६ ॥
शंखचूडवधोद्दाम ३२० गोपीरक्षणतत्परः ॥

गो०
२४

पाञ्चजन्यकरो रामी त्रिरामी वनजो जयः ॥४७॥
फाल्गुनः फाल्गुनसखो विराधवधकारकः ॥
रुक्मिणीप्राणनाथश्च३३०सत्यभामाप्रियंकरः ४८
कल्पवृक्षो महावृक्षो दानवृक्षो महाफलः ॥
अंकुशोभूसुरोभामोभामकोभ्रामको ३४० हरिः ४९
सरलः शाश्वतो वीरो यदुवंशी शिवात्मकः ॥
प्रद्युम्नोबलकर्त्ता चप्रहर्त्तादैत्यहा३५०प्रभुः ५०॥
महाधनो महावीरो वनमालाविभूषणः ॥

तुलसी दामशोभाढ्यो जालन्धरविनाशनः ५१॥
शूरः सूर्योऽमृतांडश्च भास्करो २६० विश्वपूजितः॥
रविस्तमोहा वह्निश्च वाडवो वडवानलः ॥५२॥
दैत्यदर्पविनाशी च गरुडो गरुडाग्रजः॥
गोपीनाथो २७० महीनाथो वृंदानाथोऽवरोधकः ५३।
प्रपञ्ची पञ्चरूपश्च लतागुल्मश्च गोपितः॥
गङ्गा च यमुनारूपा २८० गोदा वेत्रवती तथा ५४॥
कावेरी नर्मदा तापी गण्डकी सरयूस्तथा॥

गो०
२६

राजसस्तामसः सत्त्वी ३९० सर्वांगी सर्वलोचनः ९५
सुधामयोऽमृतमयो योगिनीवल्लभः शिवः ॥ बुद्धो
बुद्धिमतां श्रेष्ठो विष्णुर्जिष्णुः ४०० शचीपतिः ९६॥
वंशीवंशधरो लोको विलोको मोहनाशनः ॥
रवरायो रवो रावो बालो ४१० बालवलाहकः ९७॥
शिवो रुद्रो नलो नीलो लाङ्गली लांगलाश्रयः ॥
पारदः पावनो हंसो ४२० हंसारूढो जगत्पतिः ९८
मोहिनीमोहनो मायी महामायो महामखी

वृषोवृषाकपिःकालःकालीदमनकारकः ४३०।५९ स०
कुब्जाभाग्यप्रदो वीरो रजकक्षयकारकः ॥ २७
कोमलो वारुणो राजाजलजोजलधारकः ॥६०॥
हारकः सर्वपापघ्नः ४४० परमेष्ठी पितामहः ॥
खड्गधारी कृपाकारी राधारमण सुन्दरः ॥६१॥
द्वादशारण्यसंभोगी शेषनागफणालयः ॥ कामः
श्यामसुखः४५० श्रीदःश्रीपतिःश्रीनिधिःकृत ६२॥
हरिर्हरो नरो नारो नरोत्तम इषुप्रियः ॥४६० ॥

गोपालीचित्तहर्त्ता च कर्ता संसारतारकः ॥६३॥
आदिदेवो महादेवो गौरीगुरुरनाश्रयः ॥
साधुर्मधुर्विधु७४०र्धाता त्राताऽक्रूरपरायणः ६४।
रोलम्बी च हयग्रीवो वानरारिर्वनाश्रयः ॥
वनं वनी वनाध्यक्षो ४८० महावन्द्योमहामुनिः ६५
स्यमन्तकमणिप्राज्ञो विज्ञो विघ्नघातकः ॥
गोवर्द्धनो वर्द्धनीयो वर्द्धनीवर्द्धनप्रियः ॥ ६६ ॥
वर्द्धन्यो वर्द्धनो४९०वर्द्धी वार्द्धिष्णुःसुमुखप्रियः ॥

वर्द्धितो वृद्धको वृद्धो वृन्दारकजनप्रियः ॥६७॥ स०
गोपालरमणी भर्ता साम्बकुष्ठविनाशकः ॥ २१
रुक्मिणीहरणः५०० प्रेमप्रेमीचन्द्रावलीपतिः ६८
श्रीकर्ता विश्वभर्त्ता च नरो नारायणो बली ॥
गणो गणपतिश्चैव दत्तात्रेयो ५१० महामुनिः ६९
व्यासो नारायणो दिव्यो भव्यो भावुक धारकः ॥
श्वश्रेयसं शिवं भद्रं भावुकं५२० भविकं शुभम् ७०
शमात्मकः शुभः शास्ता प्रशास्ता मेघनादहा ॥

ब्रह्मण्यदेवो दीनानामुद्धारकरणक्षमः ॥ ७१ ॥
कृष्णःकमलपत्राक्षः ५३० कृष्णकमललोचनः ॥
कृष्णःकामीसदाकृष्णसमस्तप्रियकारकः ७२॥
नन्दो नन्दी महानंदी मादी मादनकः किली ५४०
मिली हिली गिली गोलीगोलो गोलालयोगुली ७३
गुग्गुली मारकी शाखा ५५० वटःपिप्पलकःकृती॥
म्लेच्छहा कालकर्त्ताचयशोदायशएव च ॥७४॥
अच्युतःकेशवोविष्णुर्हरिः५६० सत्योजनार्दनः॥

हंसो नारायणोलीलो नीलो भक्तिपरायणः ७५॥ स०

जानकीवल्लभो रामोविरामो विघ्ननाशनः ५७०॥ ३१

सहस्रांशुर्महाभानुर्वीरबाहुर्महोदधिः ॥ ७६ ॥

समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ॥

गोकुलानन्दकारी च५८० प्रतिज्ञापरिपालकः ७७

सदारामः कृपारामो महारामो धनुर्धरः ॥

पर्वतःपर्वताकारोगयोगेयोद्विजप्रियः ५९०।७८॥

कम्बलाश्वतरो रामो रामायणप्रवर्तकः ॥

गो०
३२

द्योर्दिवो दिवसो दिव्यो भव्यो भविभयापहः ७९
पार्वतीभाग्यसहितोभ्राता ६०० लक्ष्मीविलासवान्
विलासी साहसी सर्वीगर्वी गर्वितलोचनः ॥८०॥
मुरारिर्लोकधर्मज्ञो जीवनो जीवनान्तकः ६१०॥
यमो यमादियमनो यामी यामविधायकः ॥८१॥
वंसुली पांसुलीपांसुः पाण्डुरर्जुनवल्लभः ॥६२०॥
ललिताचंद्रिकामालामालीमालांबुजाश्रयः ८२॥
अंबुजाक्षो महायक्षो दक्षश्चिन्तामणिः प्रभुः ॥

मणिर्दिंनमणिश्चैव केदारो६३०बदराश्रयः॥८३॥ स०
बदरीवनसंप्रीतो व्यासः सत्यवतीसुतः ॥ ३३
अमरारिनिहन्ता च सुधा सिंधुविधूदयः ॥८४॥
चन्द्रोरविःशिवःशूली६४०चक्री चैव गदाधरः॥
श्रीकर्त्ता श्रीपतिः श्रीदःश्रीदेवो देवकी सुतः८५॥
श्रीपतिःपुण्डरीकाक्षः पद्मनाभो जगत्पतिः६५०॥
वासुदेवोऽप्रमेयात्मा केशवोगरुडध्वजः ॥८६॥
नारायणः परंधाम देवदेवो महेश्वरः ॥
३

चक्रपाणिःकलापूर्णो७७०वेदवेद्योदयानिधिः८७
भगवान्सर्वभूतेशो गोपालः सर्वपालकः ॥
अनन्तोनिर्गुणोनंतोनिर्विकल्पो६९०निरंजनः८८
निराधारो निराकारो निराभासो निराश्रयः ॥
पुरुषः प्रणवातीतो मुकुन्दः परमेश्वरः ॥८९॥
क्षणावनिः६८०सार्वभौमो वैकुण्ठो भक्तवत्सलः
विष्णुर्दामोदरः कृष्णो माधवो मथुरापतिः९०॥
देवकीगर्भसम्भूतो यशोदा वत्सलो ७१०हरी ॥

शिवः संकर्षणःशम्भुर्भूतनाथो दिवस्पतिः॥९१॥
अव्ययः सर्वधर्मज्ञो निर्मलो निरुपद्रवः॥७००॥
निर्वाणनायको नित्यो नील जीमूतसन्निभः॥९२
कलाक्षयश्च सर्वज्ञः कमलारूपतत्परः ॥
हृषीकेशः पीतवासा वसुदेवप्रियात्मजः ॥९३॥
नन्दगोपकुमारार्यो ७१० नवनीताशनः प्रभुः ॥
पुराणपुरुषः श्रेष्ठः शस्त्रपाणिः सुविक्रमः ॥९४॥
अनिरुद्धश्चक्ररथः शार्ङ्गपाणिश्चतुर्भुजः ॥७२०॥

गो० गदाधरःसुरार्तिघ्नो गोविन्दो नन्दकायुधः ॥९५॥
३६ वृन्दावनचरः शौरिर्वेणुवाद्यविशारदः ॥
तृणावर्तान्तकोभीमसाहसोबहुविक्रमः७३०।९६
शकटासुरसंहारी बकासुरविनाशनः ॥
धेनुकासुरसंहारी पूतनारिर्नृकेशरी॥ ९७ ॥
पितामहो गुरुःसाक्षात्प्रत्यागात्मासदाशिव७४०
अप्रेयप्रभः प्राज्ञोऽप्रतर्क्यःस्वप्नवर्द्धनः ॥९८॥
धान्योमान्यो भवो भावो धीरःशान्तो७५०जगद्गुरुः॥

अन्तर्यामीश्वरो दिव्यो दैवज्ञो देवता गुरुः ॥९९॥ स०
क्षीराब्धिशयनो धाता लक्ष्मीवाँल्लक्ष्मणाग्रजः ७६० ३७
धात्रीपतिरमेयात्मा चंद्रशेखरपूजितः ॥१००॥
लोकसाक्षी जगच्चक्षुः पुण्यचारित्रकीर्तनः ॥
कोटिमन्मथसौन्दर्यो जगन्मोहनविग्रहः ॥ १ ॥
मन्दस्मिताननो गोपो ७७० गोपिकापरिवेष्टितः ॥
फुल्लारविन्दनयनश्चाणूरान्ध्रनिषूदनः ॥ २ ॥
इन्दीवरदलश्यामो बर्हिबर्हावतंसकः ॥

मुरलीनिनदाह्लादो दिव्यमाल्याम्बराश्रयः ॥३॥
सुकपोलयुगः सुभ्रूयुगलः ७८० सुललाटकः ॥
कम्बुग्रीवो विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ॥४॥
पीनवक्षाश्चतुर्बाहुश्चतुर्मूर्तिस्त्रिविक्रमः ॥
कलंकरहितः ७९० शुद्धो दुष्टशत्रुनिबर्हणः ॥५॥
किरीटकुण्डलधरः कटकाङ्गदमण्डितः ॥
मुद्रिकाभरणोपेतः कटिसूत्रविराजितः ॥ ६ ॥
मञ्जीररञ्जितपदः सर्वाभरणभूषितः ॥

विन्यस्तपादयुगलो दिव्यमङ्गलविग्रहः ८००।७॥
गोपिकानयनानन्दः पूर्णचंद्रनिभाननः ॥
समस्तजगदानन्दः सुन्दरोलोकनंदनः ॥ ८ ॥
यमुनातीरसञ्चारीराधामन्मथवैभवः ॥
गोप नारीप्रियो दांतो गोपीवस्त्रापहारकः ८१०॥९
शृंगारमूर्तिः श्रीधामा तारकोमूलकारणम् ॥
सृष्टिसंरक्षणोपायः क्रूरासुरविभञ्जनः ॥ १० ॥
नरकासुरहारी च मुरारिर्वैरिमर्दनः ॥

आदितेयप्रियो८२०दैत्य भीकरश्चेन्दुशेखरः ११
जरासंधकुलध्वंसी कंसारातिः सुविक्रमः ॥
पुण्यश्लोकःकीर्तनीयोयादवेन्द्रो जगन्नुतः १२॥
रुक्मिणीरमणः८३०सत्यभामाजांबवतीप्रियः ॥
मित्रविन्दानाग्नजिती-लक्ष्मणासमुपासितः।१३॥
सुधाकरकुले जातोऽनन्त प्रबलविक्रमः ॥
सर्वसौभाग्यसम्पन्नो द्वारकायामुपस्थितः॥१४॥
भद्रासूर्य सुतानाथो ८४० लीलामानुषविग्रहः ॥

सहस्रषोडशस्त्रीशो भोगमोक्षैकदायकः ॥ १५ ॥
वेदान्तवेद्यः संवेद्यो वैद्यो ब्रह्मांडनायकः ॥
गोवर्द्धनधरो नाथःसर्वजीवदयापरः ८५० ॥१६॥
मूर्तिमान्सर्वभूतात्मा आर्तत्राणपरायणः ॥
सर्वज्ञः सर्वसुलभः सर्वशास्त्रविशारदः ॥ १७ ॥
षड्गुणैश्वर्यसंपन्नःपूर्णकामो धुरंधरः ॥
महानुभावः८६०कैवल्यदायको लोकनायकः १८
आदिमध्यान्तरहितः शुद्धसात्त्विकविग्रहः ॥

स० ४१

गो० ४२

असमानः समस्तात्मा शरणागतवत्सलः ॥१९॥
उत्पत्तिस्थितिसंहारकारणं सर्वकारणम् ॥
गम्भीरःसर्वभावज्ञः८७०सच्चिदानंदविग्रहः ॥२०॥
विष्वक्सेनः सत्यसंधः सत्यवान्सत्यविक्रमः ॥
सत्यव्रतः सत्यसंज्ञः सर्वधर्मपरायणः ॥ २१ ॥
आपन्नार्त्तिप्रशमनो द्रौपदीमानरक्षकः ॥२८०॥
कन्दर्पजनकः प्राज्ञो जगन्नाटकवैभवः ॥ २२ ॥
भक्तिवश्यो गुणातीतः सर्वैश्वर्यप्रदायकः ॥

दमघोषसुतद्वेषीबाणबाहुविखण्डनः ॥ २३ ॥
भीष्मभक्तिप्रदोदिव्यः८९०कौरवान्वयनाशनः॥
कौन्तेयप्रियबन्धुश्च पार्थस्यन्दनसारथिः ॥२४॥
नारसिंहो महावीरः स्तम्भजातो महाबलः ॥
प्रह्लादवरदःसत्योदेवपूज्यो९००ऽभयंकरः॥२५॥
उपेन्द्रइन्द्रावरजोवामनोबलिबन्धनः ॥
गजेन्द्रवरदः स्वामी सर्वदेवनमस्कृतः ॥ २६ ॥
शेषपर्यंकशयनो वैनतेयरथो ९१० जयी ॥

गो० अव्याहतबलैश्वर्यसम्पन्नः पूर्णमानसः ॥ २७ ॥
४४ योगेश्वरेश्वरः साक्षी क्षेत्रज्ञो ज्ञानदायकः ॥
योगिहृत्पंकजवासो योगमायासमन्वितः ९२०।२८
नादबिन्दुकलातीतश्चतुर्वर्गफलप्रदः ॥
सुषुम्णामार्गसंचारीदेहस्यान्तरसंस्थितः ॥२९॥
देहेन्द्रिय मनःप्राणसाक्षी चेत प्रसादकः ॥
सूक्ष्मः सर्वगतोदेहीज्ञानदर्पणगोचरः ९३०॥३०॥
तत्त्वत्रयात्मकोऽव्यक्तः कुण्डलीसमुपाश्रितः ॥

ब्रह्मण्यः सर्वधर्मज्ञःशान्तोदान्तो गतक्लमः ॥३१॥ स०
श्रीनिवासः१४०सदानन्दो विश्वमूर्तिर्महाप्रभुः ॥ ४५
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपाद् ॥३२॥
समस्तभुवनाधारः समस्तप्राणरक्षकः ॥
समस्तसर्वभावज्ञो१५०गोपिकाप्राणवल्लभः३३॥
नित्योत्सवोनित्यसौख्योनित्यश्रीर्नित्यमङ्गलः॥
व्यूहार्चितो जगन्नाथःश्रीवैकुण्ठपुराधिपः ॥३४॥
पूर्णानन्द घनीभूतो गोपवेषधरो १६० हरिः ॥

गो० कलापकुसुमश्यामः कोमलः शान्तविग्रहः ॥३५॥
४६ गोपाङ्गनावृतोऽनन्तो वृन्दावनसमाश्रयः ॥
वेणुवादरतः श्रेष्ठो देवानां हितकारकः १७०।३६
बालक्रीडासमासक्तो नवनीतस्य तस्करः ॥
गोपालकामिनीजारश्चोरजार-शिखामणिः।३७॥
परंज्योतिः पराकाशः परावासः परिस्फुटः ॥
अष्टादशाक्षरोमन्त्रो १८० व्यापको लोकपावनः ३८
सप्तकोटिमहामन्त्रशेखरो देवशेखरः ॥

विज्ञानंज्ञानसन्धानस्तेजोराशिर्जगत्पतिः ॥३९॥ स०

भक्तलोकप्रसन्नात्मा भक्तमन्दारविग्रहः ॥९९०॥ ४७

भक्तदारिद्र्यदमनो भक्तानां प्रीतिदायकः ॥४०॥

भक्ताधीनमनाः पूज्यो भक्तलोकशिवंकरः ॥

भक्ताभीष्टप्रदः सर्वभक्ताघौघनिकृन्तनः ॥४१॥

अपारकरुणासिंधुर्भगवान् भक्ततत्परः १०००४२

इति श्रीराधिकानाथ नामसाहस्रकीर्तनम् ॥

स्मरणात्पापराशीनां खण्डनं मृत्युनाशनम् ॥१॥

वैष्णवानां प्रियकरं महारोगनिवारणम् ॥
ब्रह्महत्यासुरापानं परस्त्रीगमनं तथा ॥ २ ॥
परद्रव्यापहरणं परद्वेषसमन्वितम् ॥
मानसं वाचिकं कायं यत्पापं पापसंभवम् ॥ ३ ॥
सहस्रनामपठनात्सर्वं नश्यति तत्क्षणात् ॥
महादारिद्र्ययुक्तो यो वैष्णवो विष्णुभक्तिमान् ४
कार्तिक्यां संपठेद्रात्रौ शतमष्टोत्तरं क्रमात् ॥
पीताम्बरधरो धीमान्सुगन्धिपुष्पचंदनैः ॥ ५ ॥

पुस्तकं पूजयित्वा तु नैवेद्यादिभिरेव च ॥ स०
राधाध्यानांकितो धीरो वनमालाविभूषितः॥६॥ ४९
शतमष्टोत्तरं देवि पठेन्नामसहस्रकम् ॥
चैत्रशुक्ले च कृष्णे च कुहू संक्रातिवासरे ॥७॥
पठितव्यं प्रयत्नेन त्रैलोक्यं मोहयेत्क्षणात् ॥
तुलसीमालया युक्तो वैष्णवो भक्तितत्परः ॥८॥
रविवारे च शुक्रे च द्वादश्यां श्राद्धवासरे ॥
ब्राह्मणं पूजयित्वा च भोजयित्वा विधानतः॥९॥

पठेन्नामसहस्रं च ततः सिद्धिः प्रजायते ॥
महानिशायां सततं वैष्णवो यः पठेत्सदा ॥१०॥
देशान्तरगता लक्ष्मीः समायाति न संशयः ॥
त्रैलोक्ये च महादेवि सुन्दर्यः काममोहिताः ॥११॥
मुग्धाःस्वयं समायान्ति वैष्णवं च भजन्ति ताः ॥
रोगीरोगात्प्रमुच्येत बद्धो मुच्येत बन्धनात् ॥१२॥
गुर्विणी जनयेत्पुत्रंकन्याविन्दति सत्पतिम् ॥
राजानोवश्यतां यांति किं पुनः क्षुद्रमानवाः ॥१३॥

सहस्रनामश्रवणात्पठनात्पूजनात्प्रिये ॥
धारणात्सर्वमाप्नोति वैष्णवो नात्र संशयः ।१४॥
वंशीवटे चान्यवटे तथा पिप्पलकेऽथवा ॥
कदम्बपादपतले गोपालमूर्तिसन्निधौ ॥ १५ ॥
यः पठेद्वैष्णवो नित्यं स याति हरिमन्दिरम् ॥
कृष्णेनोक्तं राधिकायै मयि प्रोक्तं पुरा शिवे ॥१६॥
नारदाय मया प्रोक्तं नारदेन प्रकाशितम् ॥
मया त्वयि वरारोहे प्रोक्तमेतत्सुदुर्लभम् ॥१७॥

गो०
५२

गोपनीयं प्रयत्नेन न प्रकाश्यं कथंचन ॥
शठाय पापिनेचैव लम्पटाय विशेषतः ॥ १८ ॥
न दातव्यं न दातव्यं न दातव्यं कदाचन ॥
देयं शिष्याय शान्ताय विष्णुभक्तिरतायच १९ ॥
गोदानब्रह्मयज्ञादेर्वाजपेयशतस्य च ॥
अश्वमेधसहस्रस्य फलं पाठे भवेद्ध्रुवम् ॥ २० ॥
मोहनं स्तम्भनं चैव मारणोच्चाटनादिकम् ॥
यद्यद्वाञ्छति चित्तेन तत्तत्प्राप्नोति वैष्णवः २१ ॥

एकादश्यां नरः स्नात्वा सुगन्धिद्रव्य तैलकैः ॥ स०
आहारं ब्राह्मणं दत्त्वा दक्षिणां स्वर्णभूषणम् २२॥ ५३
तत आरम्भकर्ताऽस्य सर्वं प्राप्नोति मानवः ॥
शतावृत्तसहस्रं च यः पठेद्वैष्णवो जनः ॥२३॥
श्रीवृन्दावनचन्द्रस्य प्रसादात्सर्वमाप्नुयात् ॥
यद्गृहे पुस्तकं देवि पूजितं चैव तिष्ठति ॥२४॥
न मारी न च दुर्भिक्षं नोपसर्गभयं क्वचित् ॥
सर्पादिभूतयक्षाद्या नश्यन्ति नात्र संशयः॥२५॥

श्रीगोपालो महादेवि वसेत्तस्य गृहे सदा ॥
गृहे यत्र सहस्रं च नाम्नां तिष्ठति पूजितम् ॥२६॥

इति श्रीसंमोहनतन्त्रे पार्वतीश्वर
संवादे श्रीगोपालसहस्रनाम
स्तोत्रं सम्पूर्णम्

उपोद्घातश्लोकाः २३, मूलसहस्रनामश्लोकाः १४१
फलश्रुतिश्लोकाः २६, एवं श्लोकसंख्या ॥ १९० ॥

श्रीगणेशाय नमः

# अथ राधाऽष्टोत्तरशतनाम प्रारम्भः

अथास्याः संप्रवक्ष्यामि ,नाम्नामष्टोत्तरं शतम् ॥
यस्य संकीर्तनादेव श्रीकृष्णं वशयेद् ध्रुवम् ॥ १ ॥
राधिका सुन्दरी गोपा कृष्णसंगमकारिणी ॥
चञ्चलाक्षी कुरङ्गाक्षी गान्धर्वी वृषभानुजा ॥ २ ॥
वीणापाणिः स्मितमुखी १० रक्ताशोकलतालया ॥

गोवर्धनचरी गोपीगोपीवेषमनोहरा ॥ ३ ॥
चन्द्रावली सपत्नी च दर्पणास्याकलावती ॥
कृपावती सुप्रतीकातरुणी २० हृदयङ्गमी ॥४॥
कृष्णप्रिया कृष्णसखी विपरीतरतिप्रिया ॥
प्रवीणासुरतप्रीता चन्द्रास्या चारुविग्रहा ॥५॥
केकराक्षीहरेः कान्ता३०महालक्ष्मी सुकेलिनी ॥
संकेतवटसंस्थानाकमनीया च कामिनी ॥ ६ ॥

वृषभानुसुता राधा किशोरी ललिता लता ॥

विद्युद्वल्ली ४० कञ्चनाभा कुमारीमुग्धवेशिनी७॥ स०
केशिनी केशवसखी नवनीतैकविक्रया ॥ ५७
षोडशाब्दा कलापूर्णा जारिणीजारसंगिनी ५०।८
हर्षिणीवार्षिणी वीरा धीरा धाराधरा धृतिः ॥
यौवनस्था वनस्था च मधुरा मधुराकृतिः६०॥९
वृषभानुपुरावासा मानलीलाविशारदा ॥
दानलीला दानदात्री दण्डहस्ता भ्रुवोन्नता॥१०॥
सुस्तनीमधुरास्या च विम्बोष्ठीपञ्चमस्वरा ७०॥

संगीतकुशलासेव्याकृष्णवश्यत्वकारिणी ॥११॥
तारिणी हारिणीह्रीलाशीलालीलाललामिका ॥
गोपाली८०दधिविक्रेत्रीप्रौढामुग्धाचमध्यका १२
स्वाधीनपतिका चोक्ता खण्डितायाभिसारिका॥
रसिका रासना रस्या९० रसशास्त्रैकशेवधिः १३
पालिका लालिकालज्जालालसाललनामणिः ॥
बहुरूपासुरूपाचसुप्रसन्ना महामतिः १००॥१४॥

मरालगमना मता मन्त्रिणी मन्त्रनायिका ॥

मन्त्रराजैकसंसेव्या मन्त्राराजैकसिद्धिदा ॥१५॥ 
अष्टादशाक्षरफला अष्टाक्षरनिषेविता ॥११८॥ 
इत्येतद्राधिकादेव्यानाम्नामष्टोत्तरं शतम्॥१६॥
कीर्तयेत्प्रातरुत्थाय कृष्णवश्यत्वसिद्धये ॥
एकैकनामोच्चारेण वशीभवति केशवः ॥ १७ ॥
वदनेचैव कण्ठे च वाह्वोरुरसि चोदरे ॥
पादयोश्चक्रमेणास्यान्यसेन्मंत्रान्पृथक्पृथक् १८
ॐ तत्सत्इत्यूर्ध्वाम्नाये राधिकाष्टोत्तरशतनाम

गो० कथनं नाम प्रथमः पटलः ॥ अथ श्रीराधामहा-
६० मन्त्रः । क्लींश्रीं राधिकायै स्वाहा ॥ अस्य श्रीरा-
धिकामन्त्रस्य अगस्त्य ऋषिः ॥ जगती छन्दः॥
श्रीराधिका परमेश्वरी देवता ॥ क्लीं बीजं
स्वाहा शक्तिः क्लीं श्रीं कीलकं श्रीकृष्णवश्यार्थं
जपेविनियोगः॥अगस्त्यऋषये नमः शिरसि ॥
जगतीछन्दसे नमः मुखे ॥ राधिकादेवतायै नमः
हृदये ॥ क्लीं बीजाय नमः गुह्ये ॥ क्लीं स्वाहा

शक्तये नमः पादयोः ॥ क्लीं श्रीं कालिकायै
नमः ॥ सर्वांगेषु ॥ श्रीं अंगुष्ठाभ्यां नमः ॥
क्लीं तर्जनीभ्यां नमः ॥ राधिकायै स्वाहा
मध्यमाभ्यां नमः ॥ क्लीं अनामिकाभ्यां नमः
श्रीं कनिष्ठिकाभ्यां नमः ॥ राधिकायै
स्वाहा करतलकरपृष्ठाभ्यां नमः ॥ क्लीं
हृदयाय नमः ॥ श्रीं शिरसे स्वाहा ॥ राधिकायै
स्वाहा शिखायै वषट् श्रीं कवचायहुम् ॥ श्रीं

नेत्रत्रयायवौषट्॥राधिकायै स्वाहा अस्त्राय फट्
ध्यात्वा जपेत् ॥ लक्षमात्रं पुरश्चरणं
कलौ चतुर्लक्षं जपित्वा कुशलीभवेत् ॥

इति राधामहामन्त्रः

---

## अथ महालक्ष्म्यष्टकम्

इन्द्र उवाच

श्रीगणेशायनमः। नमस्ते स्तुमहामायेश्रीपंठेसुरपूजिते
शंखचक्रगदाहस्ते महालक्ष्मि नमोऽस्तुते ॥१॥

नमस्ते गरुडारूढे कोलासुरभयंकरि ॥
सर्वपापहरे देवि महालक्ष्मिनमोऽस्तुते ॥ २ ॥
सर्वज्ञे सर्ववरदे सर्वदुष्टभयंकरि ॥
सर्वपापहरे देवि महालक्ष्मि नमोऽस्तुते ॥ ३ ॥
सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्तिप्रदायिनी ॥
मन्त्रमूर्ते सदा देवि महालक्ष्मि नमोऽस्तुते॥४॥
आद्यन्तरहिते देवि आद्यशक्ते महेश्वरि ॥
योगजे योगसंभूते महालक्ष्मि नमोऽस्तुते ॥५॥

गो०

६४

स्थूले सूक्ष्मे महारौद्रे महाशक्ते मनोहरे ॥
महापापहरे देवि महालक्ष्मि नमोऽस्तुते ॥ ६ ॥
पद्मासनस्थिते देवि परब्रह्मस्वरूपिणि ॥
परमेशिजगन्मातर्महालक्ष्मि नमोऽस्तुते ॥ ७ ॥
श्वेताम्बरधरे देवि नानालंकारभूषणे ॥
जगत्स्थितेजगन्मातर्महालक्ष्मि नमोऽस्तुते ॥८॥
महालक्ष्म्यष्टकं स्तोत्रं यः पठेद्भक्तिमान्नरः ॥
सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोतिसर्वदा ॥९॥

एककालं पठेन्नित्यं महापापविनाशनम् ॥
द्विकालं च पठेन्नित्यं धनधान्यसमन्वितः॥१०॥
त्रिकालं यः पठेन्नित्यं महाशत्रुविनाशनम् ॥
महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा ॥११॥

इतीन्द्रकृतो महालक्ष्म्यष्टकस्तवः सम्पूर्णः

---

# अथ गोपालस्तवराजस्तोत्रम्

ॐ अस्य श्रीगोपालमन्त्रस्य नारदऋषिः ।
अनुष्टुप्छन्दः ॥ श्रीकृष्णः परमात्मा देवता ॥

श्रीकृष्णप्रीत्यर्थं जपे विनियोगः॥अथ ध्यानम्॥

सजलजलदनीलं दर्शितोदारशीलं,
करतलधृतशैलं वेणुवाद्यैरसालम् ॥
व्रजजनकुलपालं कामिनीकेलिलोलं,
तरुणतुलसिमालं नौमि गोपालबालम् ॥ १ ॥

नारद उवाच

नवीननीरदश्यामं नीलेन्दीवरलोचनम् ॥
बल्लवीनन्दनं वन्दे कृष्णं गोपालरूपिणम् ॥२॥

स्फुरद्बर्हदलोदबद्ध नीलकुञ्चितमूर्धजम् ॥ स्त०
कदम्बकुसुमोद्भासि वनमालाविभूषितम् ॥३॥ ६७
गण्डमण्डलसंसर्गिचलत्कांचनकुण्डलम् ॥
स्थूल मुक्ताफलोदारहारोद्द्योतित वक्षसम् ॥४॥
हेमांगदतुलाकोटि किरीटोज्ज्वल विग्रहम् ॥
मन्दमारुतसंक्षोभि वलिताम्बरसंचयम् ॥५॥
रुचिरौष्ठपुटन्यस्तवंशीमधुरनिःस्वनैः ॥
लसद्गोपालिकाचेतो मोहयन्तं मुहुर्मुहुः ॥ ६ ॥

बल्लवीवदनाम्भोजमधुपानमधुव्रतम् ॥
क्षोभयन्तं मनस्तासां सस्मेरापाङ्गवीक्षणैः ॥७॥
यौवनोद्भिन्नदेहाभिः संसक्ताभिः परस्परम् ॥
विचित्राम्बरभूषाभिर्गोपनारीभिरावृतम् ॥ ८ ॥
प्रभिन्नाञ्जनकालिन्दी–जलकेलिकलोत्सुकम् ॥
योधायन्तं क्वचिद्गोपान्व्याहरन्तंगवांगणम् ॥९॥
कालिन्दीजलसंसर्गिशीतलानिलकम्पिते ॥
कदम्बपादपच्छायेस्थितंवृन्दावनेक्वचित् ॥१०॥
रत्नभूधरसंलग्न रत्नासनपरिग्रहम् ॥

कल्पपादपमध्यस्थं हेममण्डपिकागतम् ॥११॥ स्त०
वसन्तकुसुमामोदसुरभीकृतदिङ्मुखे ॥ ६९
गोवर्धन गिरौ रम्येस्थितं रासरसोत्सुकम्॥१२॥
सव्यहस्ततलन्यस्तगिरिवर्यातपत्रकम्
खण्डिताखण्डलोन्मुक्तमुक्तासारघनाघनम्।१३॥
वेणुवाद्यमहोल्लासकृतहुंकारिनिःस्वनैः
सवत्सैरुन्मुखैः शश्वद्गोकुलैरभिवीक्षितम्॥१४॥
कृष्णमेवानुगायद्भिस्तच्चेष्टावशवर्तिभिः ॥
दण्डपाशोद्यतकरैर्गोपालैरुपशोभितम् ॥ १५ ॥

नारदाद्यैर्मुनिश्रेष्ठैर्वेदवेदांगपारगैः ॥
प्रीतिसुस्निग्धया वाचास्तूयमानं परात्परम् १६॥
य एवं चिन्तयेद्देवं भक्त्याय: स्तौति मानवः ॥
त्रिसन्ध्यंतस्यतुष्टोऽसौददाति वरमीप्सितम् १७॥
राजवल्लभतामेति भवेत्सर्वजनप्रियः ॥
अचलांश्रियमाप्नोतिस वाग्मी जायतेध्रुवम् १८॥

इति श्रीगौतमीयतन्त्रे गोपालचूड़ामणि
स्तवराजः संपूर्णः

श्रीगणेशाय नमः

# अथ लक्ष्मीस्तोत्र प्रारम्भः

जय पद्मपलाशाक्षि जयत्वं श्रीपतिप्रिये ॥
जय मातर्महालक्ष्मि संसारार्णवतारिणि ॥१॥
महालक्ष्मिनमस्तुभ्यं नमस्तुभ्यं सुरेश्वरि ॥
हरिप्रिये नमस्तुभ्यं नमस्तुभ्यं दयानिधे ॥२॥
पद्मालये नमस्तुभ्यं नमस्तुभ्यं च सर्वदे ॥
सर्वभूतहितार्थाय वसुवृष्टिं सदाकुरु ॥ ३ ॥

जगन्मातर्नमस्तुभ्यं नमस्तुभ्यं दयानिधे ॥
दयावति नमस्तुभ्यं विश्वेश्वरि नमोस्तुते ॥४॥
नमः क्षीरार्णवसुते नमस्त्रैलोक्य धारिणि ॥
वसुवृष्टे नमस्तुभ्यं रक्ष मां शरणागतम् ॥ ५ ॥
रक्ष त्वं देवदेवेशि देवदेवस्य वल्लभे ॥
दारिद्र्यात्त्राहि मां लक्ष्मि कृपां कुरुममोपरि ॥६॥
नमस्त्रैलोक्यजननि नमस्त्रैलोक्यपावनि ॥
ब्रह्मादयो नमन्ति त्वां जगदानन्ददायिनि ॥७॥

विष्णुप्रिये नमस्तुभ्यं नमस्तुभ्यं जगद्धिते ॥ 
आर्तिहन्त्रि नमस्तुभ्यं समृद्धिं कुरु मे सदा ॥८॥ 
अब्जवासे नमस्तुभ्यं चपलायै नमोनमः ॥
चञ्चलायै नमस्तुभ्यं ललितायै नमोनमः ॥९॥
नमः प्रद्युम्नजननि मातस्तुभ्यं नमो नमः ॥
परिपालय मां मातर्देवि त्वं शरणागतम् ॥१०॥
शरण्ये त्वां प्रपन्नोऽस्मि कमले कमलालये ॥
त्राहि त्राहि महालक्ष्मि परित्राणपरायणे ॥११॥

ल० ७४

पाण्डित्यं शोभते नैव न शोभन्ते गुणा नरे ॥
शीलत्वं नैव शोभेत महालक्ष्मि त्वया विना १२॥
तावद्विराजते रूपं तावच्छीलं विराजते ॥
तावद्गुणा नराणां च यावल्लक्ष्मीः प्रसीदति १३॥
लक्ष्मित्त्वयाऽलंकृत मानवायेपापैर्विमुक्तानृपलोक
मान्याः ॥ गुणैर्विहीना गुणिनो भवन्ति
दुःशीलिनः शीलवतां वरिष्ठाः ॥ १४ ॥
लक्ष्मीर्भूषयते रूपं लक्ष्मीर्भूषयते कुलम् ॥

लक्ष्मीर्भूषयते विद्या सर्वाल्लक्ष्मीर्विशिष्यते॥ १५॥ 
लक्ष्मित्वद्गुणकीर्तनेनसकला भूर्यात्यलं जिह्मतां 
रुद्राद्या रविचन्द्रदेवपतयो वक्तु च नैव क्षमाः ॥
अस्माभिस्तव रूपलक्षणगुणान् वक्तुं कथं शक्यते
मातर्मांपरिपाहिविश्वजनकेकृत्वाममेष्टंध्रुवम् १६
दीनार्तिभीतं भवतापपीडितं धनैर्विहीनं तव
पार्श्वमागतम् ॥ कृपानिधित्वान्मम लक्ष्मि
सत्वरं धनप्रदानाद्धननायकं कुरु ॥ १७॥

ल० मांविलोक्यजननी हरिप्रिये निर्धनं तव समीपमा-
७६ गतम् ॥ देहि मे झटिति लक्ष्मि कराग्रं
वस्त्रकाञ्चनवरान्नमद्भुतम् ॥ १८ ॥
त्वमेव जननी लक्ष्मि पिता लक्ष्मि त्वमेव च ॥
भ्राता त्वं च सखा लक्ष्मि विद्या लक्ष्मित्वमेवच १९॥
त्राहि त्राहि महालक्ष्मि त्राहि त्राहि सुरेश्वरि ॥
त्राहित्राहि जगन्मातर्दारिद्र्यात्त्राहिवेगतः ॥२०॥

नमस्तुभ्यं जगद्धात्रि नमस्तुभ्यं नमो नमः ॥
धर्माधारे नमस्तुभ्यं नमः संपत्तिदायिनि ॥२१॥
दारिद्र्यार्णवमग्नोऽहं विमग्नोऽहं रसातले ॥
मज्जन्तं मां करे धृत्वा तूद्धर त्वं रमे द्रुतम् ॥२२॥
किं लक्ष्मि बहुनोक्तेन जल्पितेन पुनः पुनः ॥
अन्यन्मे शरणं नास्ति सत्यं सत्यं हरिप्रिये २३
एतच्छ्रुत्वाऽगस्तिवाक्यं हृष्यमाणा हरिप्रिया ॥
उवाच मधुरां वाणीं तुष्टाऽहं तव सर्वदा ॥२४॥

लक्ष्मीरुवाच

यत्त्वयोक्तमिदं स्तोत्रं यः पठिष्यति मानवः ॥
शृणोति च महाभागस्तस्याहं वशवर्तिनी ॥२५॥
नित्यं पठति यो भक्त्या त्वलक्ष्मीस्तस्य नश्यति
ऋणं च नश्यते तीव्रं वियोगं नैव पश्यति ॥२६॥
यः पठेत्प्रातरुत्थाय श्रद्धाभक्तिसमन्वितः ॥
गृहे तस्य सदा तुष्टा नित्यं श्रीः पतिनासह ॥२७॥
सुखसौभाग्य संपन्नो मनस्वी बुद्धिमान् भवेत् ॥

पुत्रवान् गुणवान् श्रेष्ठो भोगभोक्ता च मानवः २८। स्तो०
इदं स्तोत्रं महापुण्यं लक्ष्म्याऽगस्तिप्रकीर्तितम् ॥ ७९
विष्णुप्रसादजननं चतुर्वर्गफलप्रदम् ॥ २९ ॥
राजद्वारे जयश्चैव शत्रोश्चैव पराजयः ॥
भूतप्रेतपिशाचानांव्याघ्राणां न भयं तथा ॥३०॥
न शस्त्रानलतोयौघाद्भयं तस्य प्रजायते ॥
दुर्वृत्तानां च पापानां बहुहानिकरं परम् ॥३१॥
मन्दिरे करिशालासु गवां गोष्ठे समाहितः ॥

पठेत्तद्दोषशान्त्यर्थं महापातकनाशनम् ॥३२॥
सर्वसौख्यकरं नृणामायुरारोग्यदं तथा ॥
अगस्तिमुनिना प्रोक्तं प्रजानां हितकाम्यया ॥३३॥

इत्यगस्तिविरचितं लक्ष्मीस्तोत्रं सम्पूर्णम्

---

श्रीगणेशाय नमः

# अथ राधाकवचम्

पार्वत्युवाच

कैलासवासिन् भगवन् भक्तानुग्रहकारक ॥
राधिकाकवचं पुण्यं कथयस्व मम प्रभो ॥ १ ॥
यद्यस्ति करुणा नाथ त्राहि मां दुःखताभयात् ॥
त्वमेव शरणं नाथ शूलपाणे पिनाकधृक् ॥२॥

शिव उवाच

शृणुष्व गिरिजे तुभ्यं कवचं पूर्वसंचितम् ॥
सर्वरक्षाकरं पुण्यं सर्वहत्याहरं परम् ॥ ३ ॥
हरिभक्तिप्रदं साक्षाद्भुक्तिमुक्तिप्रसाधनम् ॥
त्रैलोक्याकर्षणं देवि हरिसान्निध्यकारकम् ॥४॥
सर्वत्र जयदं देवि सर्वशत्रुभयावहम् ॥
सर्वेषां चैव भूतानां मनोवृत्तिहरं परम् ॥ ५ ॥
चतुर्धा मुक्तिजनकं सदानन्दकरं परम् ॥
राजसूयाश्वमेधानां यज्ञानां फलदायकम् ॥६॥

इदं कवचमज्ञात्वा राधा मन्त्रं च यो जपेत् ॥
स नाप्नोति फलं तस्य विघ्नस्तस्य पदे पदे॥७॥
ऋषिरस्य महादेवोऽनुष्टुप छन्दश्च कीर्तितः ॥
राधाऽस्यदेवता प्रोक्ता रां बीजं कीलकंस्मृतम्॥८॥
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ॥
श्रीराधा मे शिरः पातु ललाटं राधिका तथा ९॥
श्रीमती नेत्रयुगलं कर्णौ गोपेन्द्रनन्दिनी ॥
हरिप्रिया नासिकां च भ्रूयुगं शशिशोभना॥१०॥

ओष्ठं पातु कृपादेवी अधरं गोपिका तथा
वृषभानुसुता दन्तांश्चिबुकं गोपनन्दिनी ॥११॥
चन्द्रावली पातु गण्डं जिह्वां कृष्णप्रिया तथा ॥
कण्ठं पातु हरिप्राणा हृदयं विजया तथा ॥१२॥
बाहू द्वे चन्द्रवदना उदरं सुबल स्वसा ॥
कोटियोगान्विता पातु पादौ सौभद्रिका तथा १३॥
नखांश्चन्द्रमुखी पातु गुल्फौ गोपालवल्लभा ॥
जानुदेशं जया पातु गोपी पादतलं तथा ॥१४॥
शुभप्रदा पातु पृष्ठं कुक्षौ श्रीकान्तवल्लभा ॥

जानुदेशं जया पातु हरिणी पातु सर्वतः ॥१५॥

वाक्यं वाणी सदा पातु धनागारं धनेश्वरी ॥

पूर्वांदिशं कृष्णरता कृष्णप्राणा च पश्चिमाम् १६॥

उत्तरां हरिता पातु दक्षिणां वृषभानुजा ॥

चन्द्रावली निशामेव दिवाक्ष्वेडितमेखला॥१७॥

सौभाग्यदा मध्यदिने सायाह्ने कामरूपिणी ॥

रौद्री प्रातः पातु मां हि गोपिनी रजनीक्षये१८॥

हेतुदा संगवे पातु केतुमाला दिवार्धके ॥

शेषाऽपराह्णसमये शमिता सर्वसंधिषु ॥ १९ ॥
योगिनी भोगसमये रतौ रतिप्रदा सदा ॥
कामेशीकौतुकेनित्यंयागे रत्नावली मम ॥२०॥
सर्वदा सर्वकार्येषु राधिका कृष्णमानसा ॥
इत्येतत्कथितं देवि कवचं परमाद्भुतम् ॥२१॥
सर्वरक्षाकरं नाम महारक्षाकरं परम् ॥
प्रातर्मध्याह्नसमये सायाह्ने प्रपठेद्यदि ॥ २२ ॥
सर्वार्थ सिद्धिस्तस्य स्याद्यद्यन्मनसिवर्तते ॥
राजद्वारे सभायां च संग्रामे शत्रुसंकटे ॥२३॥

प्राणार्थनाशसमये यः पठेत्प्रयतो नरः ॥ क०
तस्य सिद्धिर्भवेद्देवि न भयं विद्यते क्वचित् ॥२४॥ ८७
आराधिता राधिका च तेन सत्यं न संशयः ॥
गंगास्नानाद्धरेर्नामग्रहणाद्यत्फलं भवेत् ॥२५॥
तत्फलं तस्य भवति यः पठेत् प्रयतः शुचिः ॥
हरिद्रारोचना चन्द्रमंडितं हरिचन्दनम् ॥२६॥
कृत्वा लिखित्वा भूर्जे च धारयेन्मस्तके भुजे ॥
कण्ठे वा देवदेवेशि स हरिर्नात्र संशयः ॥२७॥

कवचस्य प्रसादेन ब्रह्मासृष्टिं स्थितिं हरिः ॥
संहारं नियतं चाहं करोमि कुरुते तथा ॥२८॥
वैष्णवाय विशुद्धाय विरागगुणशालिने ॥
दद्यात्कवचमव्यग्रमन्यथा नाशमाप्नुयात्॥२९॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे
राधाकवचं सम्पूर्णम्

मुद्रक तथा प्रकाशक :-
खेमराज श्रीकृष्णदास "श्रीवेंकटेश्वर" प्रेस, बम्बई ४

मुद्रक व प्रकाशक : मे० खेमराज श्रीकृष्णदास, अध्यक्ष श्रीवेंकटेश्वर
प्रेस, खेमराज श्रीकृष्णदास मार्ग, बम्बई-४००००४ के लिये
डी० एस० शर्मा मैनेजर